NO. 13.]

# THE VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. Oxon.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# VEDÂNTAKALPATARU

OF

AMALÂNANDA

EDITED BY

RÂMAS'ÂSTRÎ TAILAṄGA

PROFESSOR, SANSKRIT COLLEGE, BENARES.

VOL. XI.

*Part I & Part II.*



PRINTED, PUBLISHED AND SOLD BY

E. J. LAZARUS & Co., BENARES.

MAY BE HAD ALSO FROM GANESH DAS AND CO., CHOWK, BENARES:
JAYESTHARAM MUKUNDJI AND CO., BOMBAY:
OTTO HARRASSOWITZ AND M. SPIRGATIS, LEIPZIG:
LUZAC AND CO., LONDON.

1895-1897.

No. 13.]

THE

# VIZIANAGRAM SANSKRIT SERIES

UNDER THE SUPERINTENDENCE OF

ARTHUR VENIS M. A. OXON.

PRINCIPAL, SANSKRIT COLLEGE, BENARES.

THE

# VEDÂNTAKALPATARU

OF

AMALÂNANDA

EDITED BY

RÂMAS'ÂSTRÎ TAILAṄGA

PROFESSOR, SANSKRIT COLLEGE, BENARES.

VOL. XI.

*Part I.*



PRINTED, PUBLISHED AND SOLD BY

E. J. LAZARUS & Co., BENARES.

MAY BE HAD FROM GANESH DAS AND CO., CHOWK, BENARES:
JAYESTHARAM MUKUNDJI AND CO., BOMBAY:
OTTO HARRASSOWITZ AND M. SPIRGATIS LEIPZIG:
LUZAC AND CO., LONDON.

1895.

vedantakalpataru

# वेदान्तकल्पतरुः ।



निखिलदर्शनपारदृश्ववाचस्पतिमिश्रकृतभामतीव्याख्यारूपः
परमहंसपरिव्राजकाचार्यवर्यश्रीमदमलानन्दभगवदुपनिबद्धः ।



तत्र प्रथमो भागः प्रथमाध्यायान्तः ।



काशीस्थराजकीयप्रधानसंस्कृतपाठशालायां साहित्यशास्त्राध्यापकेन
मानवल्ल्युपाह्वतैलङ्गरामशास्त्रिणा सपरिष्कारं संशोधितः ।







काश्याम् ।

मेडिकल् हाल् नाम्नि यन्त्रालये
ई॰ जे॰ लाजरस् कम्पन्याख्येन मुद्रयित्वा प्रकाशितः ।

वैक्रमसंवत् १९५२ ।

श्रीः ।

# वेदान्तकल्पतरुभूमिका ।

इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्षु पुरुषार्थेषु चरम एव मौलिभूतः परीक्षकैः साधनीयश्चेति न परोक्षं परीक्षकवराणाम् । स चोपनिषद्भिर्निरूपितोऽपि केषां चिदेव महर्षीणां महर्षिकल्पानामेव वा तदर्थयाथार्थ्यावगमाद्गम्यो न पुनर्मानुषबुद्धीनामिति परमकारुणिकेन भगवता बादरायणेनोपनिषदुक्त एवार्थस्तात्कालिकानां कुशाग्रधिषणानां बोधाय चतुष्कैः* वेदान्तसूत्रैर्बीजरूपेण वेदान्तोपवने विप्रकीर्णः । अनन्तरं च विपरीतार्थग्राहिभिर्बहुविधैर्वादमात्रधुरन्धरैर्मत्सरिभि† र्भृज्यमानानीव तानि सूत्रबीजानि परिगृह्य प्रयत्नेन भाष्यशरिणा समासिच्याऽद्वैतवेदान्तशास्त्रमङ्कुरतामापादयामासुरलौकिकधिषणा आचार्यवर्यशङ्करभगवत्पादाः । समनन्तरं च निखिलतन्त्रस्वतन्त्रो वाचस्पतिमिश्रो भाष्यकारतात्पर्यनिर्णयाय विरचय्य भामतीनामकं निबन्धरत्नं वर्द्धयामास किल महता प्रमेयेणामुं वेदान्ताङ्कुरम् ।

अस्य च भामतीग्रन्थस्यातिप्रौढतया मीमांसाबहुलतया च व्याख्यानसापेक्षतां पर्यालोच्य विपश्चिदपाश्चात्याः श्रीमत्परमहंसपरिव्राजकाचार्या अमलानन्दभगवन्तः प्रणीय कल्पतरुनामानं भामतीव्याख्यानरूपं प्रबन्धं मण्डयामासुर्वेदान्तोपवनम् । भाष्यभामत्योर्मुद्रणेन जाते जगति भूयस्यद्वैतवेदान्तसिद्धान्तप्रचारे न तावत् परमोपकारकस्यास्य ग्रन्थस्याऽप्रकाशतया स्थितिरुचितेति विचार्य प्रस्तूयते किलास्य मुद्रणेन प्रकाशनम् ।

एतद्ग्रन्थकृदमलानन्दयतिवर्यः कस्मिन्काले कतमं देशमलंचकारेत्यादि किं चित्तावद्विचार्यते इतिहासरसिकानां प्रमोदाय ।

---

* चत्वारो ऽध्यायाः परिमाणमेषामिति संख्यायाः संज्ञासंघसूत्राध्ययनेष्विति कन् ।

† भास्करप्रभृतिभिः । दृश्यते चास्मकद् यत्तु भास्कर इत्यादिना कल्पतरौ, यत्तु भास्करः प्रलापेत्यादिना विवरणप्रमेयसंग्रहे च तन्नामोल्लेखपूर्वकं तन्मतखण्डनम् ।

लिखति किलायमस्मिन्नत्र कल्पतरुग्रन्थे—

> कीर्त्या यादववंशमुन्नमयति श्रीजैत्रदेवात्मजे
> कृष्णे क्ष्माभृति भूतलं सह महादेवेन संबिभ्रति ।
> भोगीन्द्रे परिमुञ्चति क्षितिभरप्रोद्भूतदीर्घश्रमं
> वेदान्तोपवनस्य मण्डनकरं प्रस्तौमि कल्पद्रुमम् ॥ इति ।

सिद्धमस्मादयं ग्रन्थो यादववंशजजैत्रदेवसुतकृष्णराजराज्यसमये समुपनिबद्ध इति ।

लब्धप्रसरा वयमधुना ऽग्रे ऽपि किं चिद् गवेषयामः । तत्र को वा ऽयं यादववंशः कियत्कालपर्यन्तं वा अनुववृते एते चोपरितनश्लोकनिर्दिष्टनामानो महीपालाश्च के इति जिज्ञासायां प्रादुर्भवन्त्या

चतुर्वर्गचिन्तामणिग्रन्थे परिशेषखण्डे कालनिर्णयप्रकरणारम्भे—

> राजा राजीवचक्षुर्विजयति* जगति स्फीतशीतांशुवंश-
> प्रादुर्भूतः क्षितीशः क्षितिपतितिलकः सिङ्घणः सिंहशक्तिः ।
> तत्पुत्रो जैत्रपालः समभवदवनीमण्डलाखण्डलश्री-
> रस्माद्विस्मापकानां समजनि यशसां भाजनं कृष्णभूपः ॥
> अस्ति प्रह्वक्ष्माभृद्भटमुकुटतटप्रांशुरत्नांशुदण्ड-
> श्रेणीवेणीविराजत्पदयुगलगलद्गर्वनिर्वैरवीरः ।
> तादृङ्निस्सीमसीमाद्भुतचरितशतारम्भदम्भाद्दशाशा-
> भित्तिन्यस्तप्रशस्तिस्तदनु तदनुजः† श्रीमहादेवभूपः ॥

इति महादेवभूपमन्त्रिणा हेमाद्रिसूरिणा विलिखिताभ्यां श्लोकाभ्याम् आदौ सिङ्घणः तत्पुत्रो जैत्रपालः तत्पुत्रौ कृष्णमहादेवौ तयोश्च कृष्णो ज्येष्ठो महादेवश्च कनीयान् भ्रातेति सिद्ध्यति । कल्पतरुकारेणापि महादेवः श्रीकृष्णदेवस्य भ्रातेति लिखितम् । तथा च समाप्तिश्लोकौ—

---

* अत्र परस्मैपदसाधुत्वं मृग्यम् । 'जगति विजयते' इति साधु ।

† तदनुजतनुजः–इति एशियाटिक्सोसाइटी (Bibliotheca Indica) मुद्रितपुस्तके ऽपपाठः "तदनु तदनुजन्मा श्रीमहादेव आसीत्" इति शासनपत्रे कल्पतरुसमाप्तिश्लोके च एवं दृष्टत्वात् । अन्यत्रापि जैत्रपालसुतत्वेन तस्य वर्णनात् । स्फुटीभविष्यत्येतदग्रे । एवं च मु॰ है॰ पुस्तके ऽपि 'तदनु तदनुजः श्रीमहादेव आसी' दिति युक्तः पाठः ।

शास्त्राम्बुधेः पारगता द्विजेन्द्रा यद्वृत्तचामीकरवारिराशेः ।
ज्ञातुं न पारं प्रभवन्ति तस्मिन् कृष्णक्षितीशे भुवनैकवीरे ॥
भ्रात्रा महादेवनृपेण सार्कं पाति क्षितिं प्रागिव धर्मसूनौ ।
कृतो मया ऽयं प्रवरः प्रबन्धः प्रगल्भवाचस्पतिभावभेदी ॥ इति ।

अत्र आदिमपुरुषत्वेन निर्दिष्टस्य सिङ्घणस्य पिता जैत्रपालः तस्यापि पिता भिल्लम इति एकस्माच्छिलालेखा*दवगम्यते । यथा तत्र श्लोकाः—

श्रीमद्यदुवंशाय स्वस्त्यस्तु समस्तवस्तुसहिताय ।
विश्वं यत्र त्रातुं जातो विष्णुः स्वतन्त्रस्तु ॥ १ ॥
गर्जद्गुर्जरकुञ्जरोत्कटघटासङ्घट्टकण्ठीरवो
लाटोरस्कविपाटपाटनपटुः कर्णाटहृत्कण्टकः ।
श्रीमान् भिल्लमभूपतिः समभवद्भूपालचूडामणि-
स्तस्माताऽऽन्ध्रपुरन्ध्रिकान्तसुखहृच्छ्रीजैत्रपालो ऽभवत् ॥ २ ॥
लक्ष्मीकान्तलवः( यः ) प्रतारितभवः श्रीजैत्रपालोद्भवः
सङ्ग्रामाङ्गणसञ्चितातिविभवः शास्ता भुवः सिङ्घणः ।
पृथ्वीशो मथुराधिपो रणमुखे काशीपतिः पातितो
येनासावपि यस्य भृत्यवटुना हम्मीरवीरो जितः ॥

अवततार पुरा पुरुषोत्तमो
यदुकुले जगतीहितहेतवे ।
जयति सोयमिमां सकलामिला-
मवति मामपि सिङ्घमहीपतिः ॥ इति ।

अमुमर्थं प्रमाणयति १२१२ शकलिखितं शासनपत्रम्† । तत्र श्लोकाः—
आस्ते पयोधिप्रतिमो यदूनां वंशः प्रतीतो भुवनत्रये ऽपि ।
यदुद्भवैर्भूपतिरत्नजातैरमण्डि पृथ्वी मृगलोचनेव ॥ ३ ॥

वंशे तस्मिन्नवनिवनितामौलिनेपथ्यरत्नं
जातः शीतद्युतिसितयशा भिल्लमः क्षोणिपालः ।

---

* अयं लेखः एकस्मिन् मठे उत्कीर्णः (See Epigraphia Indica, 1891, June, p. 340)
† See Jour. R. A. S. (Old Series) Vol. V.

अर्थिश्रेणीसुरविटपिनो यस्य विद्वेषिभूपा (पाः)
शोणश्रीकं पदकिसलयं नित्यमुत्तंसयन्ति ॥ ४ ॥
दिवं गते तत्र चरित्रधाम्नि महीमहेन्द्रे गुणरत्नसिन्धौ ।
अनन्तरं भूवत्र(ल)यैकजैत्रः श्रीजैत्रपालो नृपतिर्बभूव ॥ ५ ॥
नम्रक्ष्मापालचूडाऽऽनणुमणिकिरणोदारकासारवीची-
क्रोडक्रीडत्पदाब्जः प्रथितयदुकुलाम्भोधिनीहारभानुः ।
तत्पुत्रो ऽथ प्रतापद्युमणिरुचिचयाचान्तविद्वेषियोषि-
च्चक्षुश्चञ्चद्विलासाञ्जनतिमिरभरः सिङ्घणो ऽभून्नरेन्द्रः ॥ ६ ॥
गते त्रिदशसुन्दरीपरिचलत्कटाक्षछ(च्छ)टा-
विलासरसपात्रतां महति तत्र पृथ्वीपतौ ।
अनङ्गरिपुशेखरस्फुरदमन्दमन्दाकिनी-
पवित्रचरितः क्षितेरजनि जैत्रपालः पतिः ॥ ८ ॥
अजनि विजयलक्ष्मीविद्युदुल्लासलीला-
विलसदसिपयोदः क्षोणिपालो ऽथ कृष्णः ।
मुकुलयति विचित्रं यस्य दृप्यत्प्रताप-
द्युमणिररिनृपाणां पाणिपङ्केरुहाणि ॥ १० ॥
शरदमलमरीचिश्रीसपत्नैर्यशोभि-
र्धवलितनिखिलाशाचक्रवालो नृपालः ।
नृपकुलकमलौघध्वंसनीहारपात-
स्तदनु तदनुजन्मा श्रीमहादेव आसीत्* ॥ १२ ॥ इति ।

एते एव श्लोकाः एकस्मिन् ११९४ शालिवाहनशकलिखिते शासनपत्रे† ऽप्युपलभ्यन्ते इति तदप्युपोद्बलकमत्र । अस्य च कृष्णदेवस्य रामचन्द्रदेव(रामदेव)नामा पुत्रः प्रतापशाली बभूवेत्यपि पूर्वनिर्दिष्टाभ्यां शासनपत्राभ्यामवगम्यते । तथा हि तत्र श्लोकः—

उन्मीलद्यदुवंशमौक्तिकमणिः क्षोणीन्द्रनारायणः
पृथ्वीपालपितामहो निजभुजप्राकारभीमोदयः‡ ।

---

* See Jour. R. A. S. Vol. V.

† अस्यापि आमननामा पुत्र आसीदित्यग्रे स्फुटीभविष्यति ।

‡ एतैर्विशेषणै राज्ञो यथाक्रमं विष्णुब्रह्मशिवरूपत्ववर्णनेन प्रतापातिशयशालित्वं सूच्यते ।

खेलन्मालवमेदिनीपरिवृढप्रौढेभपञ्चाननः
सूनुः कृष्णमहीपतेर्विजयते श्रीरामचन्द्रो नृपः ॥ १३ ॥

अस्य च शङ्करदेव*भीमदेवनामानौ द्वौ पुत्रौ पुत्री चैका ऽऽसीदिति स्फुटीभविष्यति । एवमयमर्वाचीनो यादववंशक्रमः ।

अग्रे ऽप्यन्वेषणे क्रियमाणे पूर्वलिखितमहादेवनृपतिमन्त्रिणा हेमाद्रिणा ग्रथितस्य चतुर्वर्गचिन्तामणिनामकस्य ग्रन्थस्य द्वे पुस्तके लिखिते प्राचीने अशुद्धतरे समुपलब्धे, तत्र प्रथमे पुस्तके† व्रतखण्डारम्भे (ग्रन्थारम्भे) मङ्गलाचरणश्लोकास्त्रयो ऽग्रे च भिल्लमनृपप्रभृतिमहादेवनृपतिपर्यन्तानां राज्ञां यथाक्रमं नामनिर्देशपुरस्सरं वर्णनमस्ति । द्वितीये‡ तु चन्द्रप्रभृति महादेवनृपपर्यन्तानां विस्तरेण वर्णनं दृश्यते§ । तदनुसारेणायं यादववंशस्त्रिविधः सिध्यति अर्वाचीनो, मध्यमः, प्राचीनश्चेति । तत्रार्वाचीनस्तु उक्तप्रकार एव ।

तत्रैतेषां राज्यकालादिविचारे क्रियमाणे मुम्बापुरीप्रकाशितप्राचीनवृत्तान्तविचारपुस्तके, (Indian Antiquary) लन्दननगरमुद्रितप्राचीनवृत्तान्तपुस्तके च (Journ. Royal Asiatic Society, Old Series, Vol. IV. and V.) अपेक्षितं वृत्तान्तमुपलभ्य यावत्तत्प्रकाशनाय सज्जीभूतो ऽस्मि

---

* शङ्कलदेव इत्यप्यस्य नाम दृश्यते See Jour. R. A. S. Vol. V.

† इदं पुस्तकं काशीस्थयजुर्वेदिवाशिम्करोपाह्वबालमुकुन्दजोशशर्मणः ।

‡ इदं च पुस्तकं काशीस्थसहस्रबुद्ध्युपाह्वदामोदरशास्त्रिणः अतीवाशुद्धम् । अत एव अस्माद् वृत्तान्ते निखिले विशदे ऽपि तत्रत्यान् श्लोकान् साकल्येन प्रदर्शयितुं पुस्तकान्तरापेक्षा आसीत् परं डा॰ भाण्डारकरैतिहासपुस्तके अन्ते पाठभेदैः संयोज्य मुद्रितानां तेषां शुद्धानामुपलम्भात् तत्र तत्राग्रे तदनुसारेणैव पाठाः श्लोकाङ्काश्च प्रदर्शिताः ।

§ डा॰ भाण्डारकरमहाशयेनापि एव मेव पुस्तकेषु द्वैविध्यमुपलब्धम् । तत्र के चन श्लोकाः परस्परं मिश्रिताः समानानुपूर्वीका दृश्यन्ते । अत्र एकस्यैव ग्रन्थकारस्य तस्मिन्नेव ग्रन्थे कथं द्वैविध्यमिति शङ्का तु समुदेति परं हेमाद्रिः प्रथमं संक्षेपतो राजवंशवर्णनं कृत्वा आत्मनश्च वंशं निर्वर्ण्य ग्रन्थारम्भं चकार, समाप्ते च ग्रन्थे पुनरालोचनावसरे राजवंशवर्णनमादिमं न्यूनमाकलय्य तत्पूरयितुं विस्तरेण तद्वर्णनं कृत्वा तं ग्रन्थं तत्र समपूरयत् । यैस्तावत्पूर्वलिखितमेव पुस्तकं प्राप्य पुस्तकान्तरं लिखितं तत्क्रमे अयमधिको ग्रन्थो नास्ति यैस्तु तत्पूर्त्यनन्तरं लिखितं तत्क्रमे स ग्रन्थ उपलभ्यते इति कल्पने न किं चिद्बाधकं प्रतिभाति । किं बहुना केषु चित् पुस्तकेषु कविवंशवर्णनप्रभृत्येव ग्रन्थ उपलभ्यते यथा पुस्तकचतुष्टयाधारेण कलिकातानगरे एशिआटिक सोसाइटी द्वारा मुद्रिते (Bibliotheca Indica) पुस्तके, यत्र मङ्गलाचरणश्लोका अपि नोपलभ्यन्ते । कथमिदं सम्भवेद् यद् ग्रन्थकारः दानखण्डपरिशेषखण्डादिषु ग्रन्थावान्तरखण्डेषु मङ्गलाचरणं राजप्रशस्तिं च बाहुल्येन कृतवान् सकलग्रन्थारम्भे च न किं चिदपीति । तस्मादुपरितनकल्पनैव ज्यायसी प्रतिभाति ।

तावच्छ्रीमता डाक्तर् भाण्डारकरमहाशयेन लिखितमर्वाचीनदक्षिणेतिहास-पुस्तकं ग्रन्थकर्त्रा काशीस्थराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षश्रीमदार्थर् वेनिससाहिबमहाशयेभ्य उपहाररूपेण प्रेषितं तैश्च प्रकृतोपकारकं तन्मत्वा मन्निकटे अनुग्रहात् प्रेषितम् । तच्च चोपलभ्य प्रकृतं विषयं विशदीकृतं निर्मितपूर्वे स्वलेखे क्व चित्तद्योजने भवेदयं विषयो विशदतर इति विचार्य ग्रन्थकृते साधुवादान् ददद्ज्ञाताङ्गलभाषाणां संस्कृतज्ञानां रसिकवराणां प्रमोदाय पूर्वोक्तसकलपुस्तकेभ्यः सारमाहृत्य प्रयते तदारम्भाय ।

तत्राऽर्वाचीनेषु सकलेषु शासनपत्रादिषु भिल्लमनृपप्रभृत्येव वंशादिवर्णनात् तावद्वृत्तान्तज्ञानेन प्रकृतसिद्धेस्तत एवारभ्य यादववंश्यानां राज्ञां वृत्तान्तो ऽनुक्रम्यते । तत्र–

## भिल्लमः ।

पुरा किल यादववंशो होय्सल*नाम्ना प्रसिद्धो ऽतीव प्रबलतर आसीद्दक्षिणदेशे । तदा च राज्यसिंहासनारूढो **विष्णुवर्धन**नामा नृपो **चालुक्यराज**देशमाक्रम्य कृष्णातीरे स्वशिबिरं निवेशयामास । परं स कालस्तस्य स्वमनोरथपूरणायानुकूलो नासीत् । योग्यतमो ऽयं चालुक्यनृपतिः स्वप्रभावं स्थिरीचकार सकले देशे । अग्रे च वस्तुवृत्तं संवृत्तं विपरीतम् । चालुक्यानां सामन्तैः **कलचुरिवंश्यैः** तद्बलं ह्रासितं, बभूव चास्मिन् समये **लिङ्गधारि** (लिङ्गायित)मतं प्रबलीभूतम् । अस्मिंश्च काले होय्सलराज्ये **वीरबल्लाल**महीपतिः पूर्वलिखितविष्णुवर्धनपौत्र आसीत् । स च चालुक्यवंश्यान्तिमभूपतेः **सोमेश्वरस्य४** सेनानायकेन **ब्राह्म**(बोम्म)नाम्ना सहाभ्यमित्रीणो भूत्वा स्वसादिसैन्येन तं विजित्य **विज्ज़णाद्** विजित्योपार्जितान् देशान् स्ववशे चकार† ।

उदीच्याश्च यादवाः (प्रकृताः) स्वबलवृद्धये ऽभ्युत्थानाय न शैथिल्यं चक्रुः । **मल्लगि**र्नाम राजा (भिल्लमपिता) **विज्ज़णेन** सह युद्धव्यापृतो ऽभूत् । **दादा**नामा ऽस्य गजसेनानायको निजप्रतापं निवेशयामास **कलचुरि**नृपाणामुपरि । तस्य चत्वारः पुत्रा महीधर,जल्ह,साम्ब,गङ्गाधरनामान

---

* होसल–होय्सल–इत्यपि नामोपलभ्यते ।

† Ind. Ant. Vol. II. p. 300.

आसन् । येषु प्रथमो यादवानां सेनापत्ये स्वपितृक्रमप्राप्ते नियोजितः पराजिग्ये जिल्हणसैन्यम्* । चालुक्यराज्यं च समूलमुद्मूलयदयं भिल्लम एव । यस्यावदानमेवं समुपलभ्यते–

यः श्रीवर्धनमाससाद नगरं क्षोणीपतेरन्तलात्
यः प्रत्यण्डकभूभृतं च समरे दुष्टं व्यजेष्ट क्षणात् ।
यो वा मङ्गलवेष्टक†क्षितिपतिं श्रीबिल्लणं जघ्निवान्
कल्याणश्रियमप्यवाप्य विदधे यो होसलेशं व्यसुम्‡ ॥ ३८ ॥

अस्य जह्लो नाम महीधरानुजः सेनापतिरासीद्यत्सहायादस्य प्रभावो वर्णनीयः समपद्यत । यथा–

विजित्य बिज्जणं याते सुरलोकं महीधरे ।
निनाय भिल्लमं जह्लो राजतां चयवर्जिताम् ॥ ११ ॥
गूर्जरभूभृत्कटके कण्टकविषमे ऽतिदुर्गमे येन ।
भगदत्तकीर्तिभाजा दुष्टगजः स्वेच्छया नीतः ॥ १२ ॥
मल्लः पल्लवितोरुभीतिरभितस्त्रस्यद्बलो मैलुगिमुख्यः पिण्डितविक्रमस्त्रिभुवनब्रह्मा किल ब्राह्मणः ।
अन्नो नुन्नपराक्रमो विधुतभूभर्भ्रू रणप्राङ्गणे
येनाकारि मुरारिविक्रमभृता किं किं न तस्योर्जितम्§ ॥ १३ ॥

एकस्मिन् शिलालेखे|| चास्य प्रताप एवं वर्णितः–

'गर्जद्गुर्जरकुञ्जरोत्कटघटासंघट्टकण्ठीरवो
लाटोरस्ककपाटपाटनपटुः कर्णाटहृत्कण्टकः ।
श्रीमान् भिल्लमभूपतिः समभवद्भूपालचूडामणिः' इति ।

---

* जह्लणसूक्तिमुक्तावलिभूमिका द्रष्टव्या । (Dr. Bhandarkar's Early History of the Deccan, p. 105). एतद्ग्रन्थस्य द्वे पुस्तके तद्व्याख्यायाश्चैकं पुस्तकं मद्रास् नगरे राजकीयपुस्तकालये वर्तन्ते see Madras Govt. Mss. List. under सूक्तिमुक्तावली p. 109.

† मङ्गलवेढम्-इति प्रसिद्धं नगरं पण्ढरपुरनिकटे वर्तते ।

‡ श्लो· हेमाद्रिव्रतखण्डराजप्रशस्तौ ।

§ एते श्लोकाः जह्लणसू· मु· भू· द्रष्टव्याः । (See Dr. Bhand. Ear. Hist., Dec., p. 106.

|| Epigraphia Indica, June, 1891, p. 340.

एवं स्वप्रभावं कृष्णाया उत्तरकूले समवस्थाप्य देवगिरिनगरीं (दौलताबाद) स्वराजधानीं चकार, यतः प्रभृत्येते राजानो देवगिरीययादवा उच्यन्ते । यथा श्लो*.

स दण्डिकामण्डलमण्डयित्रीमकम्प्यसम्पत्प्रभवैर्विलासैः ।
चक्रे पुरं देवगिरिं गिरीशप्रसादसंपादितदिव्यशक्तिः ॥ ३६ ॥

अयं च वृत्तान्तः ११०६ शकासन्नकाले संवृत्तः । अनन्तरमेतो ऽप्यधिकविजिगीषया पुरोदक्षिणं प्रचलितो निवारितश्च वीरबल्लालेन युयुधे धारवाडप्रान्तगत लोक्किकुण्डिस्थाने, यत्र युद्धे जैत्रसिंहनामा (जैतुगि) ऽस्य प्रायशो द्वितीयः पुत्रो दक्षिणबाहुत्वेनोपमितः (सेनापतिर्वा) वीरबल्लालेन हतो, ऽभूच्च वीरबल्लालः कुन्तलदेशाधिपतिः । एतद्वृत्तान्तज्ञापके लेखे १११४ शको (1192 A. D.) लिखितो ऽस्ति ।

१११२ शके अयं कर्णाटकदेशमुपार्जितवान् चकार चैकं दानपत्रम्† ।

एवं च ११०६ शकात् (1187 A. D.) १११३ शक(1191 A. D.) पर्यन्तमस्य राज्यसमयः सिध्यति‡ ।

## जैत्रपालः १ ।

अयं तावद् भिल्लमपुत्रो महाप्रतापः १११३ शके राज्यासनमारुह्य पित्रा ऽऽरब्धेषु युद्धेषु व्यापृतस्तैलङ्गदेशनृपतिमतिप्रचण्डं निहत्य विजयी तद्देशराज्यमवाप । श्लो.

दीक्षित्वा रणरङ्गदेवयजने प्रोदस्तशस्त्रस्रुव-
श्रेणीभिर्जगतीपतीन् हुतवता येन प्रतापानले ।
तिलङ्गाधिपतेः पशोर्विशसनं रौद्रस्य रुद्राकृतेः
कृत्वा पूरुषमेधयज्ञविधिना लब्धस्त्रिलोकीजयः ॥ ४१ ॥ इति ।

---

* हे॰ व॰ राजप्रशस्तौ ।

† Ins. at Maltugi No. I. of I., p. 156. Jour. R. A. S. Vol. IV.

‡ के चित्तु ११११ शकात् १११५ पर्यन्तमेतद्राज्यं व्यवस्थापयन्ति (Jour. R. A. S. p. 5.) मतद्वये ऽपि पञ्चवर्षमित एवास्य राज्यसमयः सिध्यति । एतावति स्वल्पीयसि काले पूर्वलिखितसकलदेशविजयो नवीनराजधानीव्यवस्थापनमित्यादिश्चिरकालबहुलोद्योगसाध्यो वृत्तान्तः कथंकारं संवृत्त इत्यत्र तु संशयो भवति । नवीनत्वाद् डा॰ भाण्डारकरमहाशयविचारमनुसृत्योपरिनिर्दिष्टः कालो व्यवस्थापितः । अग्रे ऽप्युपरि तदनुसारेणैव व्यवस्थापयिष्यते ।

अयं भास्कराचार्यस्य ज्योतिषाचार्यस्य पुत्रं लक्ष्मीधरं स्वसभास्तारप्रधानपण्डितं चकारेति शिलालेखादवगम्यते* ।

लक्ष्मीधराख्यो ऽखिलसूरिमुख्यो वेदार्थवित्तार्किकचक्रवर्ती ।
क्रतुक्रियाकाण्डविचारसारो विशारदो भास्करनन्दनो ऽभूत् ॥ २० ॥

सर्वशास्त्रार्थदक्षोऽयमिति मत्वा पुरादतः ।
जैत्रपालेन यो नीतः कृतश्च विबुधाग्रणीः ॥ २१ ॥

एतस्य च राज्यसमयं १११३ शकात् ११३२ शकपर्यन्तं वदन्ति† ।

सिङ्घणः ।

११३२ शके जैत्रपाल१ पुत्रो ऽयं राज्यासनमध्यरूचत्, यस्य राज्ये यादववंशस्य महती समुन्नतिरासीत् । यथा श्लो ‡

प्रत्यर्थिपार्थिववधूनयनाम्बुपूरैः संसिच्यमान इव यादवराजवंशः ।
अत्युन्नतिं कलयति स्म जगत्प्रवीरे यस्मिन् भुजोष्मभरशालिनि शासति क्ष्माम् ॥

सिंह इत्यप्यस्य नामेति "सिंह इत्युदितविक्रम"इति पूर्वश्लोकानन्तरश्लोकाद् ज्ञायते ।

अस्य चैतत्कर्म वृत्तम् । यथा श्लो·

येनानीयत मत्तवारणघटा जज्जल्लभूमीभृतः
ककूलादवनीपतेरपहृता येनाधिराज्यश्रियः ।
येन चोणिभृदर्जुनो§ ऽपि बलिना नीतः कथाशेषतां
येनोद्दामभुजेन भोजनृपतिः काराकुटुम्बीकृतः ॥ ४३ ॥
यद्भम्भागिरिकेसरी विनिहतो लक्ष्मीधरक्ष्मापति-
र्यद्बाहावलिभिः प्रसह्य रुरुधे धाराधराधीश्वरः ।

* अयं शिलालेखः एतस्य जैत्रपालस्य पुत्रे सिंहणे राज्यं कुर्वति निर्मितः । See Epigraphia Indica, 1891, June, p. 340.

† उपरिनिर्दिष्टो हि लेख एतत्पुत्रराज्यकालिकः तत्र ११२८ शको लिखितः, एवं च ११२८ शके सिङ्घणराज्ये सति तत्पितुरस्य जैत्रपालस्य ११३२ शकपर्यन्तं कथंकारं राज्ये स्थितिः स्थिरीभवेदतो ऽस्य राज्यसमयः १११३ शकात् ११२७ शकपर्यन्तमन्ततः स्थिरीकर्तव्य इति भाति ।

‡ रामचन्द्रकृतशासनपत्रे । Jour. R. A. S. Vol. IV.

§ अयं मालवदेशराज इति संभावयन्ति Dr. Bhand. Hist. p. 106.

बल्लालक्षितिपालपालितभुवां सर्वापहारश्च यः
श्रीसिंहस्य महीपतेर्विजयते तद्बाललीलायितम् ॥ ४४ ॥

भास्कराचार्यपुत्रो लक्ष्मीधरः सिङ्घपितुर्जैत्रपालस्य सभास्तारो ऽभूदित्युक्तम्। तस्य पुत्रश्चङ्गदेव एतस्य राज्ञ आस्थानदैवज्ञो ऽभूदिति तस्मादेव लेखादवगम्यते। ११६६ शके अनेन कारित एकः शिलालेखो लभ्यते। तदस्य राज्यं ११३२ शकात् ११७० पर्यन्तमिति सिध्यति। एतद्विषये ऽन्योऽपि बहुलो वृत्तान्त उपलभ्यते परं वृथाविस्तरो नोपयुज्यते इति न लिखितः।

जैत्रपालः २।

अयं राज्यं कृतवान्न वेत्यत्र न को ऽपि प्रस्तरलेखः समुपलभ्यते परं स्वल्पकालं राज्यमकरोदिति तु अनुमीयते। यथा १११२ शकशासनपत्रे श्लो.

गते त्रिदशसुन्दरीपरिचलत्कटाक्षच्छटा-
विलासरसपात्रतां महति तत्र पृथ्वीपतौ।
अनङ्गरिपुशेखरस्फुरदमन्दमन्दाकिनी-
पवित्रचरितः क्षितेरजनि जैत्रपालः पतिः॥

इति, चतुर्वर्गचिन्तामणौ (हेमाद्रौ) परिशेषखण्डारम्भे ऽपि "तत्पुत्रो जैत्रपालः समभवदवनीमण्डलाखण्डलश्रीः" इति लेख उपलभ्यते।

अतिस्वल्पकालं राज्यमनेन कृतमिति न तस्य कुत्राप्युल्लेखो दृश्यते। चतुर्वर्गचिन्तामणिव्रतखण्डराजप्रशस्तावपि सिंहणराज्यानन्तरं—

कृष्णो महादेव इति प्रतीतौ जातौ ततः सिंहनृपस्य पौत्रौ।
तयोस्तु पूर्वप्रभवः पुरस्तात्कृष्णो ऽतिविख्यातमतिर्नृपो ऽभूत् ॥ ४५ ॥

इति श्लोके पौत्रावेव निर्दिष्टौ न पुत्र इति तद्राज्यकालस्यातिस्वल्पत्वाज्जैत्रपालनाम नोल्लिखितमिति भाति।

लिखित१हेमाद्रिपुस्तके ऽपि सिङ्घणदेवराजानन्तरं—

अथ सकलकलानामालयः पालनाय क्षितितलमवतीर्णः पौर्णमासीशशीव।
अभवदवनिपालो जैतुगिर्नाम तस्मादसमसमरधाराद्धविभूपालकालः ॥ ७ ॥

इति लेखदर्शनान्महावीरो ऽयं राज्यञ्चकारेत्यनुमीयते। तथा चास्य-राज्यसमयः ११६६ शकसमाप्तिसमयात् पूर्वमेव ऊनवर्षमात्रं व्यव-

स्थापनीयः, सर्वथा विश्वासस्तु न भवति । ११६४ शकशासनपत्रे च राजावली-निरूपणे नोट्टङ्कितमस्य नाम, सिङ्घणानन्तरं कृष्णदेवस्यैव वर्णनं लभ्यते, पूर्वप्रदर्शित ११९२ शकशासनपत्रे च पूर्वनिर्दिष्टः श्लोक उपलभ्यते, नोपलभ्यते च बलवत्तरं तद्राज्याऽलाभसाधकम्प्रमाणं यावत्तावत् सन्देह एवात्र श्रेयान् स्वल्पराज्यसमयकल्पनेन निश्चयो वा वरमैतिहासिकानाम्* ।

## कृष्णदेवः ।

जैत्रपालपुत्रः सिङ्घणदेवपुत्रः कृष्णदेवः ११६६ शके राज्यसिंहासनमारुरोह । अनेन **वीसलमूलराजा**दीनाञ्जयः कृतः अभूच्चायं धर्मसंस्थापको ऽनेकक्रतुकारक इति १ हेमाद्रि· व्र· पुस्तकाल्लभ्यते । यथा ऽस्य वर्णने श्लो·

येनाकारि विशाल**वीसल**चमूसंहारकालानले
हेलोन्मूलित**मूलराज**समरे निर्वीरमुर्वीतलम् ।
येनानेकमहाफलक्रतुकृता संवर्ध्यमानो ऽनिशं
क्षीणः कालवशात्पुनस्तरुणतां धर्मो ऽपि सम्प्रापितः ॥ ११४८ ॥

११६४ शकशासनपत्रे ऽप्ययं बहुक्रतुकारीति दृश्यते । श्लो·

मखसम्प्रीणितैरिन्द्रपदाय मरुतां गणैः ।
समाहूत इव क्ष्मापः स प्राप सुरमन्दिरम् ॥ १० ॥

अस्य च लक्ष्मीदेवनामा जनार्दनसूनुः सहायको मन्त्री आसीदिति ज्ञायते । श्लो·†

विश्वत्राणपरायणः स्फुरदुरुस्वर्णार्चितार्थिव्रज-
स्तस्मादद्भुतविक्रमः समभवच्छ्रीलक्ष्मिदेवः सुधीः ।
मन्त्रैर्निर्जितदेवमन्त्रिधिषणैर्जायन्नयप्रक्रमै
राज्यं कृष्णमहीपतेरविकलं दत्वा स्थिरं यो व्यधात् ॥ २१ ॥

---

* एतदुत्तराधिकारिकृष्णदेवकारिते ताम्रपत्रे ११७५ शकः प्रमाथिसंवत्सरश्च लिखितः । सप्तमो ऽयमब्दस्तद्राज्यस्येत्यपि तत्र लिखितमस्ति · See Bhand. Hist. p. 112. एवं च ११६६ शके कृष्णदेवस्य राज्यारम्भो वक्तव्यः, सिंहणस्यापि राज्यसमाप्तिकालः स एवेति मध्ये एतद्राज्यकालः सिध्येत् चेत् स मासगणित एव कल्पनीयः ।

† जल्हणसूक्तिमुक्तावली । Dr Bhand. Hist. p. 113.

अगस्त्य इव यस्यासिर्न्यञ्चितक्षितिभृद्बभौ ।
चित्रं सो ऽप्यकरोन्नृत्यत्कबन्धं समरार्णवम् ॥ २२ ॥

अस्यैव राज्ये वेदान्तकल्पद्रुमनामकोयं निबन्ध उपनिबद्ध इति प्राक् प्रतिपादितम् ।

एवं च ११६६ शके राज्यमासाद्य ११८१ शकपर्यन्तमयं भूमण्डलमनुशशासेति सिद्धम् ।

## महादेवदेवः ।

अयं कृष्णराजानुजो जैत्रपालपुत्रः कृष्णदेवे मृते तत्पुत्रस्य रामचन्द्रदेवस्याऽप्राप्ताधिकारस्य बालस्य राज्यसंरक्षणाय* स्वयं ११८२ शके राज्यासनमारूढवान्, कुर्वंश्च देवगिरौ राज्यं समुपार्जयद्दक्षिणदेशसाम्राज्यपदम् । अस्यैव राज्ञः **सर्वश्रीकरणाधिपत्य**पदे नियुक्तः प्रसिद्धतमो **हेमाद्रिसूरि**†श्चतुर्वर्गचिन्तामणिनामकं ग्रन्थरत्नं निर्मितवान् इति तस्मादेव ग्रन्थादवसीयते । यथा—

अस्ति शस्तगुणस्तोमः सोमवंशविभूषणम् ।
**महादेव** इति ख्यातो राजराजेव भूतले ॥ ६ ॥
तस्यास्ति नाम **हेमाद्रिः सर्वश्रीकरणप्रभुः** ।
निजोदारतया यश्च सर्वश्रीकरणप्रभुः ॥ १३ ॥

अनेन च तैलङ्गगुर्जरकोङ्कणकर्णाटलाटदेशेषु तत्तद्भूपतीन् प्रसभं विजित्य राज्यमक्रियतेत्यपि हे० व्र० राजप्रशस्तौ स्फुटम् । श्लो०—

---

* युक्तं चैवं कल्पनम्, अन्यथा पितृक्रमप्राप्तं राज्यं तत्पुत्रं विहाय कनिष्ठभ्रातरं कथमिवाश्रयेत । युक्तं चास्य कृष्णराजमरणकाले बाल्यकल्पनम् । यतो ह्यस्य १२३१ शके (1309 A. D.) परलोकगतिर्निरूपयिष्यते । कृष्णदेवमरणसमयश्च ११८२ शके, निरूपितः (1260 A. D.) तत्समये ऽस्य वयः ७ वर्षमितं चेत्कल्प्यते तथाप्यस्य ५७ वर्षमितमायुः सिध्यति । तद्युज्यते ऽस्य पितृमरणकाले बाल्य, मत एव चैतत्पितृव्यस्य महादेवदेवस्य राज्यपदारोहणम् ।

† हेमाद्रिरयं वत्सगोत्रः कामदेवपुत्रो वासुदेवपौत्रो महामान्यो ऽर्वाचीनानां सर्वेषामेव धर्मशास्त्रनिबन्धकाराणाम् । ततः किं चिदेवार्वाचीना माधवाचार्य(विद्यारण्य) प्रमुखा विपश्चिन्मौलिमणयो ऽपि सबहुमानं गृह्णन्ति किलास्य नाम । कालमाधवे कालनिर्णयप्रकरणे "यद्यप्यसौ हेमाद्रिप्रभृतिषु ग्रन्थेषु निर्णीतस्तथाप्यनेकत्र विप्रकीर्णस्यैकत्र सङ्ग्रहाय यत्नः क्रियते" इति लेखो दृश्यते, ऽतो माधवाचार्यो (विद्यारण्यः) ऽस्मादर्वाचीनः । माधवाचार्यसमयश्च १३१३ शके (1392 A. D.) निर्णीतो ऽस्माभिः । विजयनगरसंस्कृतपुस्तकावल्यां (Vizianagram Sanskrit Series) मुद्रितविवरणप्रमेयसंग्रहभूमिका द्रष्टव्या ।

तैलङ्गक्षितिपालतूलनिचयप्रोत्क्षेपचण्डानलो
गर्जद्गुर्जरगर्वपर्वतभिदादम्भोलिदोर्विक्रमः ।
हेलोन्मूलितकोङ्कणक्षितिपतिः कर्णाटलाटोद्भव-
क्षोणीपालविडम्बनः स हि महादेवः कथं वर्ण्यते ॥४८॥

११६४ शकशासनपक्षे ऽपि दिग्विजयो ऽनेन कृत इति वर्णितम् ।

श्लो.—

विजित्य पाथोनिधिमेखलायास्तलं धरित्र्या निखिलं स भूपः ।
क्रमेण सुत्रामजिगीषयेव स्वर्गप्रयाणाभिमुखो बभूव ॥

अनेन १६ क्रतवः कृता इति हे. दा. खं. ज्ञायते । यथा

षोडश क्रतवो येन चक्रिरे चक्रवर्तिना ।
अपूर्णपञ्चयज्ञानां नृपाणां तेन का तुला ॥ ११ ॥

हे. व्र. श्लो.—

यो भोजदेवान्नृपतेः प्रतापी जग्राह वाहं मदमन्दसत्त्वः ।
सार्धं जनन्या सह जीवितेन सोमेश्वरस्यापि जहार राज्यम् ॥ ४९ ॥
यदीयगन्धद्विपगण्डपालीनिष्ठ्यूतदानाम्बुतरङ्गिणीषु ।
सोमः समुद्रप्लवपेशलो ऽपि ममज्ज सैन्यैः सह कोङ्कणेशः ॥ ५० ॥

वाहानामपि यस्य वैरिविषयेष्वातन्वतां धन्विना-
मा तिल्लिङ्गनृपाङ्गणादनुदिनं वाह्यादिलीला ऽभवत् ।

---

हेमाद्रिणा कृता (अन्यैः पण्डितैरेतन्नाम्ना कृता वा) ग्रन्थाः चतुर्वर्गचिन्तामणिर्धर्मशास्त्रे, वाग्भट्टकृतवैद्यकटीका आयुर्वेदरसायननाम्नी, वैष्णवसिद्धान्तप्रकाशस्य वोपदेवकृतस्य व्याख्या चेति । वोपदेवो ऽस्य सभापण्डित आसीत् । अनेनैव वोपदेवेन हरिलीलानामको भागवतनिरूपितार्थानां संक्षेपेण बोधको ग्रन्थः कृतः । तथा हि श्लो.—

विद्वद्धनेशशिष्येण भिषक्केशवसूनुना ।
हेमाद्रिर्वोपदेवेन मुक्ताफलमचीकरत् ॥
श्रीमद्भागवतस्कन्धाध्यायार्थादि निरूप्यते ।
विदुषा वोपदेवेन मन्त्रिहेमाद्रितुष्टये ॥

(Dr. Rajendralál's notices of Sanst. Mss., Vol. II, pp. 48 and 200)

अयं हेमाद्रिर्मन्त्रिपदमवापेत्यस्माल्लेखात् पूर्वोक्तरीत्या च सिद्धम् । अस्य सर्वराजकीयलेखाध्यक्षताऽरूपा मन्त्रिता आसीदित्यैतिहासिकाः कल्पयन्ति। अत एव एतद्ग्रन्थे (चतुर्वर्गचिन्ता. मणौ व्र. खं) राजप्रशस्तिर्या लिखितपुस्तके दृश्यते सा सर्वथा प्रामाणिकी सिद्धा न तत्राऽप्रामाण्यकलङ्कशङ्कावकाशः ।

यस्तस्यैव रणे जहार करिणस्तत्पञ्चशब्दादिकान्
यस्तत्याज वधूवधादुपरतस्तद्भूभुजं रुद्रमाम्* ॥ ५१ ॥

पयठरपुरनगरे एकः शिलालेखः ११६२ शके प्रमोदसंवत्सरे लिखित उपलभ्यते, यत्र एतद्राज्ये काश्यपगोत्रोद्भवेन केशवशर्मणा ब्राह्मणेन अप्तोर्यामयागः कृत इति वर्णितमस्ति† ।

अस्य च आमननामकः पुत्र आसीद् य एतदुत्तरं राज्यासनमाचक्राम, परं कृष्णदेवसुतेन रामदेवेन तत्स्ववशे ऽचिरादेव कृतम् ‡ । तत्र तस्य राज्यकालो नाम कश्चित् सिध्यतीति तदुल्लेखादुपरतम् । एवं च अस्य महादेवनृपतेः ११८३ शकात् ११९२ शकपर्यन्तं राज्यकालः स्फुटः ।

## रामचन्द्रदेवः ।

पूर्वोक्तरीत्या कृष्णदेवपुत्रो ऽयं महादेवदेवराज्यानन्तरं ११९३ शके राज्यासने समुपाविशत् । समाप्तिश्चात्रैव दक्षिणदेशीयस्वाधीनराज्यस्य । १२१६ शके प्रथमतो यवना दक्षिणदेशजये मतिमकुर्वन् । यथा तावदेतत्फलं समजनि तथा निरूपितं फेरिश्ता नामकेतिहासपुस्तके ।

६९३ यवनशके १२१६ शालिवाहनशके अल्लाऊद्दीनः जलालुद्दीनस्य दिल्लीपतेः आज्ञां गृहीत्वा करादेशम्प्रति प्रचलितस्तत्र च बलवन्वंश्यानां प्रधानपुरुषाणां नामावलिसूचीं निर्मितवान् । अनन्तरं च ८००० सादिवरैः सह समीपतरेण पथा दक्षिणदेशराजस्य रामदेवस्य वंशपरम्परागतविभवसमृद्धस्याभ्यमित्रीणत्वे कृतमतिः दक्षिणसीमानम्प्राप्य राजधान्यभिमुखम्प्रतस्थे । इलीचपुरं प्राप्य तत्र किं चिद्विश्रम्य देवगिरिम्प्रति प्रचचाल । अस्मिंश्च काले रामदेवः अल्लाउद्दीनवृद्धिक्रमं श्रुत्वा स्वपुत्रेण सह राजधानीतो दूरङ्गतो ऽपि शीघ्रमागत्य राजधानीद्वारे अल्लाउ-

* वैद्यनाथकृते प्रतापरुद्रीये काकतीयवंशोद्भवो गणपतिमहाराजः स्वसुतायै रुद्रमायै स्वराज्यमर्पितवान् यां स रुद्र इति पुत्रत्वेन व्यवहृतवानिति "एवमेतत् अन्यथा कथमीश्वरप्रसादादृते निरङ्कुशं स्त्रीव्यक्तिविशेषस्य लोकाधिपत्यम् । एवं मानुषशम्भुना गणपतिमहाराजेनाभ्यन्तरस्यानुभावस्य सदृशमत्र पुत्र इति व्यवहारः कृतस्तदनुगुणा च पुत्र इत्याख्या" इति ग्रन्थाद् ज्ञायते । इयं प्रतापरुद्रं पुत्रत्वेनाददे । एवं च प्रतपरुद्रस्य तन्नामग्रन्थकर्तुर्वैद्यनाथस्यापि एतदुत्तरं रामचन्द्रराज्यसमकालिकत्वं निर्विवादम् । Dr. Bhand. Early Hist., p. 114.

† See Paithan Grant, Ind. Ant. Vol. XIV., p. 317.

‡ See Dr. Bhand. Early Hist., p. 115.

ट्टीनेन सह बहुना सैन्येन युयुधे परं महतीं हानिं प्राप्य पराजितो ऽभूत् । ततश्च पराजितो रामदेवः ६०० मणपरिमितं मौक्तिकराशिं २ मणमितं मणिनिचयं १००० म० राजतं वार्षिकं करं च दातुं प्रतिश्रुत्य सन्धिं चकार । अग्रे च करदाने किं चिच्छैथिल्यं चकारेति सम्भाव्यते, यतो हि ७०६ यवनशके १२२८ शालि॰ शके ३०,००० सादिसैन्येन सह मल्लिककफूर-हुगरदिनारीनामा वर्षचयात्संचितं करभारं संचेतुं प्रहितो बहुशो दक्षिणदि-ग्विभागं वशीकृत्य देवगिरिमुपरुरोध, रामदेवश्च तद्वशङ्गतस्तमनुजगाम आदिल्लीनगरं, यत्र स प्राप बहुमानं पुनस्थापितः स्वराजासने, राजरायन्नप-दव्या च भूषितो लेभे १लक्षटङ्कान् स्वगृहप्रत्यागमनव्ययकृते ।

ततः परं रामदेवः दिल्लीनगरे वार्षिककरप्रेषणे कदापि शैथिल्यं नाकरोद्यावज्जीवम् । ७०६ यवनशके १२३१ शालि॰ शके वारङ्गा-लीवशीकरणप्रसङ्गेन देवगिरावागतं मल्लिककफूरं खोज्वाहाजीनामानं च यवनसेनापतिं रामदेवः स्वातिथ्येन समुपचचार, अस्मिन्नेव च वत्सरे परलोकं समुपजगामेत्येष रामदेववृत्तान्तः । तदेवं ११९३ शकात् (1271 A. D.) १२३१ शक (1309 A. D.) पर्यन्तं रामदेवराज्यं पर्यवस्यति ।

## शङ्करदेवः ।

रामचन्द्रदेवस्य (रामदेव) पुत्रो ऽयं १२३१ शके (1309 A. D.) राज्याधिकारमाससाद । अव्यवहितोत्तरे च संवत्सरे (1310 A. D.) यौ सेनापती रामदेवेन समुपचरितावभूतां तावेव पुनर्द्वारसमुद्रविजयप्रसङ्गाद्दे-वगिरिं मार्गेण सम्प्राप्तौ । तदा ऽमुं शङ्करदेवं पितृकृतां मैत्रीं शिथिलयन्तम-न्वभूताम् । अग्रेऽपि शङ्करदेवः प्रातिकूल्यं स्पष्टं समदर्शयत्, स्वविजयिभ्यः नियमितं वार्षिकं करं च नादाद्, यतः प्राप्तो ऽन्य आक्रमणप्रसङ्गः । मल्लिक-कफूरनामा सेनापतिः चतुर्थपर्याये पुनर्दक्षिणदिशं प्रति प्रतस्थे ७१२ यवन॰ शके १२३४ शालि॰ शके (1312 A. D.) बलादाक्रम्य चामुं प्राणैर्वियोजयमास, प्रसारयामास च यवनराज्यं दाबुल्नगराद् राइचुरमुडकल्पर्यन्तं, देवगिरिं च निजावासस्थानमकरोत् । एवम् १२३१ शकात् (1309 A. D.) १२३४ शक (1312 A. D.) पर्यन्तं शङ्करदेवराज्यं सिद्धम् ।

अस्य च कनीयान् भ्राता **भीमदेव**नामको **भगिनी** चैका हरपाल-देवपत्नी आसीत् । तत्र भीमदेवस्याग्रे किं वृत्तं तन्न विद्मः, परमस्य भगिनीपति-र्हरपालदेवः शङ्करदेवमरणोत्तरं पुनर्दक्षिणदेशे ऽभ्युत्थानमकरोत्, अत्रान्तरे च अल्लाउद्दीनः ७१६ यवनशके १२३८ शालि॰ शके (1316 A. D.) मृतः । अस्मिन्नेव रन्ध्रे **हरपालदेवः** पुनर्देवगिरिराज्यं प्राप ।

परमचिरादेव **मुबारकखिलजी**नामा यवनमहीपतिः स्वयमेव दक्षिणदेशं प्रति गतो मार्गे देवगिरिं प्राप्य युद्धोद्युक्तं हरपालमाचक्राम, कान्दिशीकं च तमनुद्रुत्य जीवग्राहं गृहीत्वा राजधान्या बहिर्द्वारे ऽस्य शिरो लम्बयामास ।

अयमेव च देवगिरियादवराजराज्यान्तिमकालः । अग्रे च **महम्मद्-तोग्लूक्** राजा एनं देवगिरिं स्वराजधानीमकरोद्, निवेशयामास च तत्र दिल्लीवास्तव्यं प्रजावर्गं, विदधे चास्य नाम **दौलताबाद्** इति यदद्य यावत्प्रसिध्यति ।

एतावता प्रबन्धेन अर्वाचीनो यादववंशवृक्ष एवं सिध्यति ।




इति ।

## अथैषां राज्यसमयसुखावबोधाय प्रस्तारः प्रदर्श्यते ।

| | राजानः | शकात् (A.D.) | शकः (A.D.) | राज्यवर्षाणि । |
|---|---|---|---|---|
| १ | भिल्लमः | ११०६ (1187) | १११३ (1191) | ५ |
| २ | जैत्रपालः | १११३ (1191) | ११३२ (1210) | २० |
| ३ | सिङ्घणः | ११३२ (1210) | ११६६ (1247) | ३८ |
| ४ | जैत्रपालः | ० | ” | ० |
| ५ | कृष्णदेवः | ११६६ (1247) | ११८२ (1260) | १४ |
| ६ | महादेवः | ११८२ (1260) | ११९३ (1271) | १२ |
| ७ | रामचन्द्रदेवः | ११९३ (1271) | १२३१ (1309) | ३९ |
| ८ | शङ्करदेवः | १२३१ (1309) | १२३४ (1312) | ४ |

समाप्तो ऽत्रार्वाचीनो यादववंशः ।

पूर्वलिखितहेमा· व्र· पुस्तकराजप्रशस्त्यनुरोधाद् मध्यमो ऽपि क्रम-माचेण प्रदर्श्यते, येन इतो ऽपि प्राचीनवृत्तान्तविचाररसिकानां विनोदः संभाव्यते ।

१ दृढप्रहारी
|
२ सेउणचन्द्रः १
|
३ धाडियसः १
|
४ भिल्लमः १
|
५ राजगिः १

६ वादुगिः १
|
७ धाडियसः २
|
८ भिल्लमः २ (९२२ शके)
|
९ वेसुगिः १
|
१० अर्जुनः

११ भिल्लमः ३ (९४८ श·)
|
१२ वादुगिः २
|
१३ वेसुगिः २
|
१४ भिल्लमः ४
|
१५ सेउणः २

१६ परम्मदेवः    १७ सिंहराजः
|
१८ मल्लगिः

१९ अमरगाङ्गेयः    २१ अमरमल्लगिः    २३ भिल्लमः ५ (१११३ शके) मृतः 1191 A. D.
|
२० गोविन्दराजः    २२ कालीयबल्लालः

हेमाद्रिव्रतखण्डराजप्रशस्तौ यथोपलब्धश्चन्द्रप्रभृतिप्राचीन-
यादववंश्यनृपक्रम इत्थम्—

| | | | |
|---|---|---|---|
| १ इन्दुः | १६ सुयज्ञः | ३१ जीमूतः | ४६ भजमानः |
| २ बुधः | १७ उशनाः | ३२ विकृतिः | ४७ विदूरथः |
| ३ पुरूरवाः | १८ क्षितेयुः | ३३ भीमरथः | ४८ शूरराशिः |
| ४ आयुः | १९ मरुत्तः | ३४ नवरथः | (प्रतिक्षत्रः) |
| ५ नहुषः | २० कम्बलबर्हिः | ३५ दशरथः | ४९ भोजः |
| ६ ययातिः | २१ रुक्मकवचः | ३६ शकुनिः | ५० हृदिकः |
| ७ यदुः | २२ पराजित् | ३७ करम्भिः | ५१ देवमीढुषः |
| ८ क्रोष्टा | २३ ज्यामघः | ३८ देवराजः | ५२ शूरः |
| ९ वृजिनीवान् | २४ विदर्भः | ३९ देवक्षत्रः | ५३ वसुदेवः |
| १० स्वाहितः | २५ क्रथः | ४० मधुः | ५४ कृष्णः |
| ११ नृशङ्कुः | २६ कुन्तिः | ४१ कुरुबलः | ५५ प्रद्युम्नः |
| १२ चित्ररथः | २७ वृष्णिः | ४२ पुरुहोत्रः | ५६ अनिरुद्धः |
| १३ शशबिन्दुः | २८ निवृत्तिः | ४३ आयुः | ५७ वज्रः |
| १४ पृथुश्रवाः | २९ दशार्हः | ४४ सात्वतः | ५८ प्रतिबाहुः |
| १५ अन्तरः | ३० व्योमा | ४५ अन्धकः | |

५९ सुबाहुः

| | | | |
|---|---|---|---|
| पुत्रः ? | ६० दृढप्रहारी | पुत्रः ? | पुत्रः ? |
| (पूर्वदिक्पतिः) | (दक्षिणदिक्प्रभुः) | (पश्चिमदिक्प्रभुः) | (उत्तरदिक्पतिः) |

---

अत्रान्तिमाद् भिल्लमादर्वाचीनो यादववंशः प्रवृत्तः । उपरिनिर्दिष्टस्तु मध्यमो वंशः ।

अत्र यत्रास्मः पार्श्वे शकाङ्का दत्तास्तद्वृत्तान्तज्ञानाय डा० भाण्डारकररचितदक्षिणेतिहास-पुस्तकं (Dr. Bhand. Early Hist.) द्रष्टव्यम् ।

अत्र च डा० भाण्डारकरमहाशयेन धाडियसस्य ७ भ्रातृत्वेन भिल्लमो निर्दिष्टः । १३ वेसुगिनृपानन्तरमेतत्पुस्तकानुरोधादुपलभ्यमानो ऽर्जुनो न प्रदर्शितः, केषां चित्रामान्तराण्यपि प्रदर्शितानि तन्मूलं तत एवावगन्तव्यम् । See Dr. Bhand.'s History, p. 104. अस्माभिस्तु हेमाद्र्यनुरोधाद्यथोक्तमेवोपन्यस्तम् । अयं सूक्ष्माक्षरमुद्रितो ग्रन्थः १७ पृ० अधो ज्ञेयः ।

एतावता च प्रबन्धेनार्वाचीनकृष्णदेवनृपसमये ११६६ शकात् (1247 A. D.) ११८२ शका(1260.) भ्यन्तरे कल्पतरुरचनाकाल इति ग्रन्थकृतो ऽप्ययमेव समयः पर्यवसितः ।

एतद्ग्रन्थकारस्य **अमलानन्द** इति **व्यासाश्रम** इति च नामद्वयं तल्लेखादेव स्फुटीभवति । तथा हि अ. ३ पा. १ आरम्भे ।

कल्पादौ नूनमाशा हरिरसृजदमूः कीर्तिविस्तारविद्वः
श्रीमद्व्यासाश्रमस्य प्रतिवदनमधात् कर्णयुग्मं विरिञ्चिः ।
श्रोतुं वाचस्पतेर्वाक्सरणिषु विततं कल्पवृक्षं निबन्धं
भेजे वज्री सहस्रं चरितमभिनवं द्रष्टुमक्ष्णाम्बुजानाम् ॥ १ ॥

इदम् **अमलात्मनः**—

मत्सरपित्तनिदानं विदुषामरुचिं चिकित्सति प्रबलाम् ।
स्वगुणगणामृतवर्षैः कृतिरेषा कर्णरन्ध्रगता ॥ २ ॥

अस्य च गुरुः **अनुभवानन्द** इत्यपि ग्रन्थे स्फुटम् । यथा. श्लो.

स्वयंप्रभसुखब्रह्मदयारचितविग्रहम् ।
यथार्थोऽनुभवानन्दपदगीतं गुरुं नुमः ॥ ८ ॥ आरम्भे ।

अन्ते च ।

अमृतममृतेरप्यायासीदतीव सुदुर्लभं
प्रवरगुणवच्छिष्यैर्यच्च स्थितं सुखमाप्यते ।
अजनि कमला यस्माद्विद्यावपुर्निखिलार्तिहा
गुरुमनुभवानन्दं तं नौम्यपारकृपानिधिम् ॥ २ ॥

**आनन्दात्म**यतीश्वरप्रशिष्यो ऽयमित्यपि तत्रैवारम्भे ।

विद्याप्रश्रयसंयमाः शुभफला यत्सन्निधिस्थानतः
पुंसां हस्तगता भवन्ति सहसा कारुण्यवीक्षावशात् ।
आनन्दात्मयतीश्वरं तमनिशं वन्दे गुरूणां गुरुं
लब्धं यत्पदपद्मयुग्ममनघं पुण्यैरनन्तैर्मया ॥ ६ ॥

**सुखप्रकाशा***दधीतविद्यो ऽयमित्यपि तत्रैव ।

---

* चित्सुखमुनिशिष्यस्तत्त्वदीपिकाटीकाकारः सुखप्रकाशः । एतत्कृततत्त्वदीपिकाटीकापुस्तकं १५५८ वैक्रमवर्षलिखितं काशीस्थराजकीयसंस्कृतविद्यालयीयपुस्तकालये वर्तते ।

यन्थयन्थ्यभिधाः स्फुटन्ति मुकुला यस्योदये कौमुदा
व्याकुर्वत्यपि यच्च मोहतिमिरं लोकस्य संशाम्यति ।
प्रोद्यत्तारकदिव्यदीप्ति परमं व्योमापि नीराज्यते
गोभिर्यस्य सुखप्रकाशशशिनं तं नौमि विद्यागुरुम् ॥ १० ॥

नासिकात्र्यम्बकक्षेत्रे निवसता ऽमलानन्दभगवता ऽयं ग्रन्थः कृत इति

"अस्ति किल ब्रह्मगिरिनामा गिरिवरः
त्रैयम्बकजटाजूटकलनाय विनिर्मिता ।
पाण्डुरेव पटी भाति यत्र गोदावरी नदी ॥
सकुसुमफलचूतरुद्धघर्मद्युतिकरपातवनालिषूपजाते ।
तमसि हरकिरीटचन्द्रनुन्ने धवलनिशा इव भान्ति वासराणि ॥"

एत*द्व्याख्यानावसरे परिमलो† अप्पयदीक्षितानां "नासिकात्र्यम्बकस्थाने निवसद्भिराचार्यै‡रयं ग्रन्थः कृत इति प्रसिद्धिः" इति लेखादवगम्यते । (परि॰ पृ॰ १४७ पं॰ ११–१२)

आस्तां तावत् प्रस्तुतोपयोगिन्यप्यप्रस्तुता चिन्ता, प्रस्तुतं तावदनुसरामः ।

तदमलानन्दसंग्रथितममुं कल्पतरुग्रन्थं काशिकराजकीयसंस्कृतपाठालयस्थे द्वे पुस्तके, एकं च सहस्त्रबुद्ध्युपाह्वदामोदरशास्त्रिणो भामतीसहितम्, अन्यच्च काशीस्थपण्डितवरशिवकुमारमिश्रपुस्तकं संपूर्णम्, इतरे द्वे एकं काशीस्थतारकाश्रममठस्थं चतुस्सूत्र्यन्तं,मितरच्चेदानीं देशं गतस्य पं॰ राममूर्तिशास्त्रिणस्तैलङ्गाक्षरलिखित, मित्येवं षट् पुस्तकानि गृहीत्वा मुद्रयितुमुपक्रान्तो ऽस्मि । प्रदर्शितवांश्चास्मि तत्र तत्रोपलब्धान् पाठभेदानधः, अन्तरान्तरागतेषु पूर्वमीमांसोत्तरमीमांसाधिकरणेषु प्रदर्शितवानस्मि तन्मूलस्थानानि, प्रतिपृष्ठं च तद्गतविषयं निर्दिष्टवानस्मि, प्रत्यधिकरणं चाधिकर-

* कल्पतरुः । पृ॰ ८४ ।

† अयं च परिमलग्रन्थः सकलशास्त्रपारदृश्वभिरप्पयदीक्षितैर्विरचितः कल्पतरुव्याख्यारूपो मयैव संशोध्य सपरिष्कारं विजयनगरसंस्कृतपुस्तकावल्यां (Viziānagram Sanskrit Series). मुद्र्यमाणो ऽनेन सहैव विदुषां नयनपथं यास्यतीत्याशासे ।

‡ अप्पयदीक्षितः परिमले कल्पतरुकारमेवाचार्यपदेन वारं वारं व्यपदिशति ।

थान्तर्गतानि सूत्राण्यधः प्रदर्श्य तन्नामानि सङ्ख्यां च लिखितवानस्मि, प्रतिपृष्ठं प्रान्तभागे भामत्यां तद्ग्रन्थलाभसौकर्याय भामतीपृष्ठाङ्कांश्चान्तरा-न्तरा निवेशितवानस्मि, प्रतीकानां प्रत्यभिज्ञासौकर्याय स्थूलाक्षरैस्तान् विश-दीकृतवानस्मि, सङ्कलिततत्संख्यामपि च स्फुटीकृतवानस्मि । एवं सप-रिष्कारं सावधानं च संशोध्य मुद्रणोत्तरं पुनरप्येकवारं निध्याय मद्दृष्टिमति-दोषेण मुद्रकजनदोषेण वा ऽवशिष्टा अशुद्धीः पृथक् शुद्धिपत्रं निर्माय निःसारि-तवानस्मि, मद्भ्रातृवरैश्च महामहोपाध्यायश्रीदगङ्गाधरशास्त्रिभिः क्व चिदु-पलब्धाऽशुद्धिप्रबोधनेन च सुतरामनुगृहीतोस्मि । एवमपि यत्र क्व चिन्मा-दृशाल्पज्ञजनदृष्टिमतिदोषसुलभसंभवा मुद्रकदोषसुलभा वा ऽशुद्धयो दृग्गोच-राश्चेद्विपश्चितां तर्हि गुणगृह्यैस्तैः प्राथमिके ऽत्र मुद्रणे भवेयुरेव ताः क्षान्ता इति बाढं विश्वसन्नस्मि ।

पुनः पुनः कालातिपाताऽसहिष्णुभिर्विपश्चिद्भिस्तद्दिदृक्षुभिः परि-चोदितो विचार्य मुद्रितस्य भागस्य प्रथमाध्यायसमाप्त्यन्तं सम्पूर्णग्रन्थार्धं तावत्पर्यन्तमेवैकं खण्डं साम्प्रतं विद्वद्वराणां पुरत उपहारीकरोमि । याव-च्छक्यमवशिष्टखण्डस्यापि तथा करणे सत्वरं प्रयतिष्ये अर्थये च जगदी-श्वरान्निखिलान्तरायपरीहारम् । आस्ते तावदिदानीमिदमेव विज्ञाप्यं यदेवं महता प्रबन्धेन सुपरिष्कृत्य मुद्रितो ऽयं यथार्थनामा वेदान्तकल्पतरु-र्विलसतु सुहृदयहृदयालवाले, ददातु नैःश्रेयसं फलं तदभिलाषुकाणां, भवेच्च ग्रन्थकारस्य मामकीनस्यापि परिश्रमस्य साफल्यमिति विज्ञाप्य सकलवेदा-न्तप्रतिपाद्यं सर्वव्यापकं तदेवान्तरं ज्योतिः प्रसादयामीति । शुभम् ।

वाराणस्याम् | मानवल्ल्युपाह्वस्तैलङ्ग-<br>
वैक्रमसंवत् १९५२ | रामशास्त्री ।



# समन्वयाख्यप्रथमाध्यायान्तर्गताऽधिकरणसूची ।

## तत्र प्रथमे पादे



* इदं व्यासाधिकरणमालानुसारेणाधिकरणान्तरम् । ग्रन्थकारेण प्रत्यधिकरणमिव एतदधिकरणादिमसूत्रं न प्रतीकतो निर्दिष्टमतोऽनुमीयते दहराधिकरण एव स एतदन्तर्भावं मन्यते इति । तदनुरोधादेव पुस्तके तस्य अधिकरणान्तरत्वेन प्रदर्शनं न कृतम् ।

---

## प्रथमाध्यायगताधिकरणसूत्रसंख्या ।

| पादे । | अधिकरणानि । | सूत्राणि । | आदितः अधि० । | आदितः सूत्राणि । |
|---|---|---|---|---|
| १ | ११ | ३१ | ११ | ३१ |
| २ | ७ | ३२ | १८ | ६३ |
| ३ | १४ | ४३ | ३२ | १०६ |
| ४ | ८ | २८ | ४० | १३४ |



## कल्पतरुपुस्तके सांकेतिकचिन्हविवरणम् ।



| | |
|---|---|
| अ॰ | अध्यायः |
| पा॰ | पादः |
| सू॰ | सूत्रम् |
| अधि॰ | अधिकरणम् |
| आ॰ | आह्निकम् |
| जै॰ सू॰ / जैमिनिसू॰ | जैमिनिसूत्रपाठः |
| व्या॰ सू॰ / व्याससू॰ | व्याससूत्रपाठः |
| पु॰ पा॰ | पुस्तकपाठः |
| मु॰ पु॰ पा॰ | मुद्रितपुस्तकपाठः |
| तै॰ पु॰ पा॰ | तैलङ्गाक्षरपुस्तकपाठः |
| आ॰ मु॰ जै॰ न्या॰ मा॰ पु॰ | आनन्दाश्रममुद्रितजैमिनीन्यायमालाविस्तरपुस्तके |
| मु॰ भा॰ पु॰ | मुद्रितभामतीपुस्तके |
| परि॰ पु॰ | परिमलपुस्तके |
| १ पु॰ | सहस्रबुद्ध्युपाह्वदामोदरशास्त्रिपुस्तकं भामतीसहितम् प्राचीनं शुद्धं च |
| २ पु॰ | काशीस्थराजकीयपाठालयस्थं प्राचीनम् पुस्तकम् |
| ३ पु॰ | काशीस्थराजकीयपाठालयीयपुस्तकं समूलं नातिप्राचीनम् |
| ४ पु॰ | काशीस्थतारकाश्रममठस्थम् चतुःसूत्र्यन्तं सपरिमलम् |
| ५ पु॰ | काशीस्थपण्डितवरशिवकुमारमिश्रपुस्तकं शुद्धम् प्राचीनं च |
| कल्प॰ | कल्पतरुः |
| श्लो॰ | श्लोकः |
| टि॰ | टिप्पणी |
| पृ॰ | पृष्ठम् |
| पं॰ | पङ्क्तिः |

टि॰ प्रान्त (Margin) गता अङ्का एशियाटिक् सोसाइटी (Bibliotheca Indica) मुद्रितभामतीपुस्तकानुसारात् स्थापिताः ते च स्थूलाः पृष्ठाङ्काः सूक्ष्माश्च पङ्क्त्यङ्का वेदितव्याः ।



# शुद्धिपत्रम् ।

| पृ॰ | प॰ | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ६ | २५ | प्राप्नत्वन | प्राप्तत्वेन |
| १५ | ६ | प्रपञ्चा | प्रपञ्चो |
| १६ | १ | सामानाधिकरण्ये | समानाधिकरणे |
| १७ | १३ | निवृत्यर्थ- | निवृत्त्यर्थ- |
| १६ | २७ | क्षपकतया | क्षेपकतया |
| २२ | ७ | त्क्वाप्रत्यय- | क्त्वाप्रत्यय- |
| ३२ | २३ | उपक्ररकत्वात् | उपकारकत्वात् |
| ३४ | २३ | उतर- | उत्तर- |
| ३५ | शिरसि Heading | काम्यष्टीनां | काम्येष्टीनां |
| ४५ | ६ | व र्ताम् | वर्त्तताम् |
| ४८ | १७ | श्रेत्रोत | श्रत्रेति |
| ५३ | ७ | सम्भमः | संभवः |
| ५५ | १६ | नानात्वस्यष्टत्वात् | नानार्थस्येष्टत्वात् |
| ५७ | ३ | विभुत्व- | विभक्तत्व- |
| ६१ | ५ | अग्नीषोमीया | अग्नीषोमीयाः |
| ६४ | १५ | उतम- | उत्तम- |
| ६५ | १८ | सिद्ध- | सिद्धे |
| ६६ | १ | भवताति | भवतीति |
| ६९ | १० | प्रकरणा- | प्रकरण- |
| ७१ | २१ | कुम्भाटेवं | कुम्भादेवं |
| ७३ | १३ | उपलक्षणात् | उपलक्षणात्वात् |
| ८० | १३ | बाधे- | बाधा |
| ८१ | शिरसि Heading | वेदान्तेक- | वेदान्तैक- |
| ८२ | ८ | लक्षस्य | लक्ष्यस्य |
| ८४ | १३ | शङ्कद्योती | शङ्काद्योती |
| ८५ | †टि॰ | शब्धो | शब्दो |
| ८६ | १ | शब्दापक्रमात् | शब्दोपक्रमात् |
| ९० | १५ | प्रतातापि | प्रतीतापि |
| ९४ | ५ | साधानस्य | साधनस्य |
| ९८ | ६ | स्रवेन | स्रुवेन |
| १०३ | १२ | जात | ज्ञानं |
| १०८ | १२ | समुदायकत्वात् | समुदायवत्त्वात् |
| ११२ | २३ | प्रधानप्रत्ययार्थं | प्रधानं प्रत्ययार्थं |
| ११३ | १ | मीलयत्त्वित्यर्थं | मीलयन्त्वित्यर्थः |
| ११४ | §टि॰ | नेतरो॰ १५<br>मान्त्र॰ १६<br>तस्मिन्नस्य | मान्त्र॰ १५ .<br>नेतरो १६ ।<br>अस्मिन्नस्य |
| ११६ | २१ | चतुराय- | चतुरय- |
| १२७ | *टि॰ | उभयस्मि-<br>र्न्नवि- | उभयस्मि-<br>न्नप्य वि- |
| १३१ | †टि॰ | उपासना- | उपासा- |
| १३४ | २४ | इत्यादि ाष्ये | इत्यादिभाष्ये |
| १३५ | ८ | जावा- | जीवा- |
| १३५ | ‖टि॰ | कर्तृव्यत्र- | कर्तृव्यत्र- |
| १४६ | ६ | षिज्ञा- | षिज्ञो |
| १५८ | ७ | एताश्च | एतांश्च |
| १६० | १४ | प्रतातौ | प्रतीतौ |
| १६४ | १७ | ब्रह्मणः | ब्रह्मणः |
| १६५ | १८ | सा च क्वे- | सा च क्वे- |
| १७० | २२ | बुद्ध्यपपादने | बुद्ध्युपपादने |
| १७३ | २२ | साध्यव्याप्तेः | साध्याऽव्याप्तेः |
| १७४ | ८ | निजुन्हवे | निजुन्हुवे |
| १७६ | १५ | जयम्भ | जयभ्म |
| १७९ | शिरसि Heading | वाक्यभ्यो | वाक्येभ्यो |
| १८३ | १२ | प्रतिनीत्वा | प्रति नीत्वा |
| १९० | १८ | वाक्यन | वाक्येन |
| १९१ | शिरसि Heading | तिवीता- | निवीता- |
| १९५ | १ | उत्सर्जेद् | उद्वर्जेद् |
| १९८ | ४ | संभावा- | संभवा |
| २०० | २ | तिचयमः | र्तीचयमः |
| २०४ | १७ | सामासार्थे-<br>संख्या॰ इति । | समासार्थः सं-<br>ख्या॰ इति |
| २०८ | २५ | सृष्टा | सृष्टाः |
| २१२ | †टि॰ | समाकर्षा | समकर्षात् |
| २१५ | २५ | कर्तेति मब्द | कर्तेति शब्दे |



# प्रान्ताङ्कशुद्धिपत्रम् ।

| अशुद्धाः | | शुद्धाः | | | अशुद्धाः | | शुद्धाः | | |
|---|---|---|---|---|---|---|---|---|---|
| पङ्क्तौ | अङ्काः | अङ्काः | पङ्क्तौ | पृष्ठे | पङ्क्तौ | अङ्काः | अङ्काः | पङ्क्तौ | पृष्ठे |
| ४ | ३ । २२ | ३ । २२ | ३ | ५ | ११ | ११२ । ८ | ११२ । ८ | १२ | ९० |
| १६ | ४ । ११ | ४ । १ | १७ | ५ | २१ | ११३ । ६ | ११३ । ६ | २२ | ९० |
| | ६ । २ | ६ । ३ | ७ | ७ | | १६२ । ९१ | १६२ । ९ | १४ | १३२ |
| | ,, । १८ | ५३ । १८ | ६ | ४१ | | २३ । १३ | २२३ । १३ | २४ | १६१ |
| | ५७ । ५ | ५७ । ६ | २४ | ४२ | | २४० । २ | २४० । १ | २१ | १६९ |
| ५ | ६२ । १० | ६२ । १० | ६ | ४७ | | २५२ । ११ | २५३ । ११ | १४ | १७६ |
| | ,, । १८ | ,, । २४ | २४ | ६४ | | ,, । १२ | ,, । २१ | २० | १८४ |
| | ८३ । २३ | ८३ । ४ | १ | ६५ | | २८८ । १२ | २८८ । १५ | १५ | २०० |
| | ,, । ६ | १०३ । ६ | २१ | ८० | | २६६ । ८ | २६६ । १८ | २४ | २०४ |
| | ११० । ६ | ११७ । ६ | २१ | ८७ | | ३२४ । १ | ३०४ । १ | २६ | २१९ |
| | ११७ । १५ | ११० । १५ | २७ | ८८ | | ३२० । १६ | ३२० । २३ | १५ | २२२ |
| २ | ११९ । २१ | ११९ । २९ | ३ | ९० | | | | | |



# वेदान्तकल्पतरुः ।

## ॐ नमः परमात्मने ।

यदज्ञातं जीवैर्बहुविधजगद्विभ्रमधरं
वियद्यद्वद्बालैस्तलमलिनतायोगि कलितम् ।
तदुन्मुद्रज्ञानप्रततसुखसद्ब्रह्म परमं
नमस्यामः प्रत्यक् श्रुतिशतशिरोभिः प्रकटितम् ॥ १ ॥
बोधाभीषुशतैरबोधतिमिरं हृद्व्योमगं दारयन्
प्रज्ञावारिधिमुन्नतिं च गमयन्सोमः सदोदेति यः ।
तं संसारसहस्ररश्मिजनितक्लेशापहं दक्षिणा-
मूर्तिं निर्मलयोगिचिन्त्यचरणाम्भोजं भजे शङ्करम् ॥ २ ॥
माद्यन्मोहमहेभकुम्भदलनप्रोद्भूतसन्मौक्तिक-
द्योतालंकृतसत्सुखाद्वयवपुः श्रीमान्नृकण्ठीरवः ।
प्रह्लादोक्तगिरः प्रमाणनविधौ दिव्याकृतिः स्तम्भतो
निर्यातः प्रकटीभवेत्स हृदयाम्भोजे ममाखण्डितम् ॥ ३ ॥
ललितैः पदविन्यासैर्या नृत्यति विबुधवदनरङ्गेषु ।
सच्छास्त्रवेदवाद्यैः सरस्वतीं तां नमस्यामः ॥ ४ ॥
भजमानविघ्नभित्तिप्रभित्तिकुट्टालमिव करेण रदम् ।
दधतं महागणेशं प्रणौमि सकलेष्टसंपदं ददतम् ॥ ५ ॥
यन्न्यायसूत्रग्रथितात्मबोधसौरभ्यगर्भश्रुतिपद्ममाला ।
प्रसाधयत्यद्वयमात्मतत्त्वं तं व्यासमाद्यं गुरुमानतोऽस्मि ॥ ६ ॥
वेदान्तार्थतदाभासक्षीरनीरविवेकिनम् ।
नमामि भगवत्पादं परहंसधुरन्धरम् ॥ ७ ॥
स्वयम्प्रभसुखब्रह्म*दयारचितविग्रहम् ।
यथार्थानुभवानन्दपदगीतं गुरुं नुमः ॥ ८ ॥

---

* सुखं ब्रह्मेत्यादिः पाठः २-५ पु० ।

विद्याप्रश्रयसंयमाः शुभफला यत्संनिधिस्थानतः
पुंसां हस्तगता भवन्ति सहसा कारुण्यवीक्षावशात् ।
आनन्दात्मयतीश्वरं तमनिशं वन्दे गुरूणां गुरुं
लब्धं यत्पदपद्मयुग्ममनघं पुण्यैरनन्तैर्मया ॥ ९ ॥
ग्रन्थग्रन्थ्यभिधाः स्फुटन्ति मुकुला यस्योदये कौमुदा
व्याकुर्वत्यपि यच्च मोहतिमिरं लोकस्य संशाम्यति ।
प्रोद्यत्तारकदिव्यदीप्ति परमं व्योमापि नीराज्यते*
गोभिर्यस्य सुखप्रकाशशशिनं तं नौमि विद्यागुरुम् ॥ १० ॥
वैदिकमार्गं वाचस्पतिरपि सम्यक् सुरचितं चक्रे ।
नयविजितवादिदैत्यः स जयति विबुधेश्वराचार्यः ॥ ११ ॥
रूढोयं वेदकाण्डान्नयमयविटपो भूरिशाखाविचारः
सद्वर्णानन्तपर्णः† समुदितपरमब्रह्मबोधप्रसूनः ।
साक्षाद्दुस्तावचेयं ददममृतफलं जीवविश्वेशवीन्द्रः
संसारार्कोत्थतापप्रमथननिपुणस्तन्यते कल्पवृक्षः ॥ १२ ॥
कीर्त्या यादववंशमुन्नमयति श्रीजैत्रदेवात्मजे
कृष्णे क्ष्माभृति भूतलं सह महादेवेन संबिभ्रति ।
भोगीन्द्रे परिमुञ्चति क्षितिभरप्रोद्भूतदीर्घश्रमं
वेदान्तोपवनस्य मण्डनकरं प्रस्तौमि कल्पद्रुमम् ॥ १३ ॥

श्रीमच्छारीरकव्याख्यायाः प्रारिप्सिताया अविघ्नसमाप्त्यादिसिद्धये शास्त्रप्रतिपाद्यां परां देवतां प्रणमन् शास्त्रीयविषयादि‡ दर्शयति **अनिर्वाच्येति** । एका ह्यविद्या अनादिर्भावरूपा देवताधिकरणे§ वक्ष्यते अन्या पूर्वपूर्वविभ्रमसंस्कारस्तदविद्याद्वितयं सत्त्वासत्त्वाभ्याम् अनिर्वाच्यं सचिवं सहकारि यस्य तत्तथा । तत्सचिवता ब्रह्मणस्तद्विषयता तदाश्रयास्तु जीवा एवेति वक्ष्यते । न चाविद्यासाचिव्ये ब्रह्मणो ऽनीश्वरत्वमुपकरणस्य स्वातन्त्र्याविघातकत्वादित्याह **प्रभवत इति** । अतत्त्वतो ऽन्यथाभावो विवर्तः । न

---

* नीराजते इत्यसंगतः पाठः २ पु॰ ।

† सद्वर्णाद्दीर्णपर्ण इति ३–५ पु॰ । १ पु॰ पाठान्तरत्वेनैवं प्रदर्शितम् ।

‡ शास्त्रीयमित्यसमस्तः पाठः २ पु॰ । § व्याससूत्र॰ अ॰ १ पा॰ ३ सू॰ २६–३३ ।

केवलं भूतानां ब्रह्मविवर्त्तत्वमपि तु जीवानामपि चराचरशरीरोपाधिकानां तत्प्रतिबिम्बत्वेन* तद्विवर्त्ततेत्याह **यतश्चेति** । अथ वा भूतसृष्टिवद्भौतिकसृष्टेरपि हिरण्यगर्भद्वारा ब्रह्मैव कर्तृ इत्यनेनोक्तम् । एवमज्ञान†विपर्यस्तत्वाभ्यां विषयत्वमुक्त्वा प्रयोजनतामाह **अपरिमितेति** ॥ १ ॥

जगद्विवर्ताधिष्ठानत्वेन ब्रह्मणः सर्वकर्तृत्वमुक्त्वा सर्वज्ञत्वं ज्ञानपदसूचितं वेदकर्तृत्वादिना साधयति **निःश्वसितमिति** । वीक्षणमात्रेण सृष्टत्वाद्भूतानि वीक्षितम् । हिरण्यगर्भद्वारा साध्यं चराचरं वीक्षणाधिकप्रयत्नसाध्यस्मितसाम्यात्स्मितम् । सर्वज्ञत्वसिद्ध्यर्थं चेतनधर्मसुप्तिमत्त्वेन चेतनतां सम्भावयति **अस्य चेति** । यद्वा विना ऽऽयासेन नामरूपसृष्टिप्रलयकर्तृत्वाद्ब्रह्मानेन स्तुतम् ॥ २ ॥

**षड्भिरिति** । ईश्वरस्य षडङ्गानि पुराणोक्तानि ।

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ।
अचिन्त्यशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥ इति ।

अव्ययानि वायुपुराणे पठ्यन्ते ।

ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः ।
स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च ।
अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे ॥ इति ।

वेदस्य षडङ्गानि निरुक्तादीनि‡ । अव्ययानि च चादयः ॥ ३ ॥

तिलकप्रियः स्वामी **तिलकस्वामी** । सर्वसिद्धिविधायित्वं स्मृतिसिद्धम् ।

आदित्यस्य सदा पूजां तिलकं स्वामिनस्तथा ।
महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात्§ ॥ इति ॥ ४ ॥

**वेधसे** विधात्रे ईश्वराय हरेः ज्ञानशक्तेरवतारः प्राप्तिर्यस्मिन् स तथा । तथा चाह श्रीपराशरः ।

---

* प्रतिबिम्बत्वेनेति तच्छब्दविकलः पाठः २ पु॰ । † अविज्ञातेति २ पु॰ पा॰ ।

‡ व्याकरणादीनीति ५ पु॰ पा॰ ।

§ याज्ञवल्क्यस्मृतिः । अ॰ १ श्लो॰ २९४ । यद्यपि सर्वेषु पुस्तकेषु तिलकस्वामिन इति पाठो दृश्यते तथापि स्मृतिपाठानुरोधान्मिताक्षरानुरोधाच्चोपरितन एव पाठो युक्त इति स एव निवेशितः ।

द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने ।
वेदमेकं सुबहुधा कुरुते जगतो हितम् ॥ इति ॥ ५ ॥

इह भगवता सूत्रकारेण साधनचतुष्टयसम्पत्त्यनन्तरं ब्रह्मजिज्ञासामुपदिशता जिज्ञास्यस्य ब्रह्मणः संदिग्धत्वसप्रयोजनत्वे समसूचिषातां * तदाक्षेपसमाधानपरताम् आह कोऽयमित्यतः प्राक्तनस्य भाष्यस्य दर्शयति २ । ४ अथेत्यादिपरिहरतीत्यन्तेन । अथशब्दः प्रतिग्रन्थं व्याख्यानप्रारम्भार्थः । इहाहम्प्रत्ययगम्यमात्मानमुपनिषत्प्रतिपाद्यमापाद्य जिज्ञास्यत्वाक्षेपस्तत्पुनर्ब्रह्मेत्यादौ तु तदतिरिक्तं ब्रह्मोररीकृत्य तस्य वेदान्तेभ्य एव सिद्धेर्विचारविषयत्वाक्षेप इति भेदः । जिज्ञास्यत्वव्यापके सन्दिग्धत्वसप्रयोजनत्वे तद्विरुद्धे चासन्दिग्धत्वनिष्प्रयोजनत्वे तयोरुपलब्धिस्ततश्च व्यापकाभावे व्याप्यजिज्ञास्यत्वाभाव इत्यर्थः । अत्र प्रयोगौ । मुमुक्षुणा ब्रह्म न विचार्यं† तं प्रत्यसन्दिग्धत्वात् तथाविधकुम्भवत् । तथा ऽप्रयोजनत्वात् काकदन्तवत्‡दिति । आद्यं हेतुं विवृणोति तथाहि इत्यादिना । बृंहणत्वात् देहादीनां परिणमयितृत्वात् । नन्वहंप्रत्ययस्य देहादिमिश्रविषयत्वात् कथं विविक्तविषयत्वमत आह न चाहमिति । देहालम्बन इति । आत्मैक्याध्यस्तदेहालम्बन इत्यर्थः । देहादात्मनो ऽहंप्रत्ययगम्यस्य भेदग्रहान्नाध्यास इत्याह तदालम्बनत्वे हीति । बालस्थविरदेहयोः परिमाणभेदान्न प्रत्यभिज्ञेत्युक्तम् । परिमाणभेदेऽपि देहैक्यं मन्वानं प्रत्याह स्वप्नान्तइति । जाग्रत्यप्याह योगेति । मनुष्यः सन् कृत्रिमं व्याघ्रशरीरमभिमन्यमानो योगव्याघ्रः । नाहङ्कारालम्बनं देह इति । अत्रापि देहशब्द आत्मैक्याध्यस्तदेहपरः । अन्यथा हि जिज्ञास्यत्ववादिनापि तन्मात्रालम्बनत्वानङ्गीकारादनुक्तोपालम्भः स्यादिति । अथ वा लोकायतमतं प्रसङ्गादाशङ्क्य निरस्यते । ३ । २ प्रख्यानं शब्दः । असत्यप्यारोपिते अभेदे इत्यर्थः । वास्तवाभेदस्याध्यासवादिनो ऽप्यनिष्टेः । लोकायतनिरासे तु यथाश्रुतो ऽर्थः । द्वितीयं हेतुं विभजते अप्रयोजनत्वाच्च इत्यादिना । ननु किमिति नास्त्यन्यदात्मयाथात्म्यज्ञानं ब्रह्मात्मभावस्योपनिषद्भिरवबोधनादत आह न चाहमि-

* एतदग्रे–ते चाध्यासप्रसिद्ध्यधीनसिद्धिनी अत इत्यधिकं ३ पु ।
† न जिज्ञास्यमिति ५ पु॰ पा॰ । ‡ काकदन्तपरीक्षावदिति ५ पु॰ ।

तीति । युक्तमिति निर्देशात् पूर्वस्यैव सिद्धान्तत्वं व्यावर्तयति **अत्र चेति ।** ननु पुरुषान्तरवचनो युष्मच्छब्दः कथमचेतने देहादौ प्रयुक्तो ऽत आह **इदमस्मदिति ।** नन्विदङ्कारप्रयोगेपि प्रत्यक्पराग्भावेन भवति भेदप्रतीतिः एते वयमिति तु सामानाधिकरण्यं गौणं तथा त्वङ्कारप्रयोगे ऽपीति न विशेषः कश्चिदत आह **इति बहुलं प्रयोगदर्शनादिति ।** यद्यप्युभयत्र गौणत्वमविशिष्टं तथापि विरलप्रयोगत्वात् स्फुटं त्वमहमिति सामानाधिकरण्ये गौणत्वं ततस्तन्न भेदं तिरोदधीतीत्यत्यन्तभेदसिद्धिः । इमे वयमिति तु बहुलप्रयोगत्वेन निरूढमिति तिरोदधीत भेदमतो नात्यन्तभेदसिद्धिः । दृश्येते च लाक्षणिकत्वाविशेषे ऽपि प्रयोगबाहुल्याबाहुल्याभ्यां निरूढसांप्रतिकते यथा पटः शुक्लो रथाङ्गनामा चक्रवाक इति । प्रयुञ्जते बहुलं वेदाश्च कवयश्च अयमहमस्मीति एते वयमिमे दाराः कन्येयं कुलजीवितमित्यादि । न सहानवस्थानं दृष्टान्ते विवक्षितं दार्ष्टान्तिके तदभावात् किं त्वन्योन्यात्मना ऽस्फुरणमित्यभिप्रेत्याह **परस्परेति ।** ननूलूकादेः प्रकाशे ऽप्यस्ति तमस्त्वारोपः तत्राह **न हीति ।** समुदाचरन्त्यौ भेदेन भासमाने वृत्ती वर्तने ययोस्ते तथा । उलूकादेरविवेकादारोप इत्यर्थः । इतरेतरभावानुपपत्तिर्नामेतरेतरभावप्रतीत्यनुपपत्तिर्विवक्षिता तन्मात्रानुपपत्तिसाधने ऽध्यासवादिनं प्रति सिद्धसाधनत्वादित्यभिप्रेत्य दृष्टान्ते स्थित्वा वक्ति **परस्परात्मतया प्रतिपत्तुमिति ।** इतरस्येतरत्र भाव इति योजने धर्मिणोरपि संसर्गाध्यासनिषेधः स्यात्तथा च सिद्धसाधनं तादात्म्याध्यासाभ्युपगमात् तन्निवृत्त्यर्थमाह **इतरेतरत्वमिति । विनिमयो** व्यत्यासः । **रूपवत इति ।** गगनस्य तु स्वगतसवितृकरादिप्रतिबिम्बनद्वारा सलिले प्रतिबिम्बितत्वविभ्रमः । ततश्च रूपवत एव प्रतिबिम्बभाव इति व्याप्तेर्न व्यभिचारः । आत्मनस्तु नास्ति प्रतिबिम्बितत्वभ्रमकरं किं चिदित्यर्थः । धर्माध्यासो हि धर्मिणोरैक्यारोपेण प्रतिबिम्बभावेन वा दृष्ट इह प्रतिबिम्बभावे निरस्ते आरोपः शिष्यतइत्याह **पारिशेष्यादिति ।** अध्यासानुपपत्तिमुक्त्वा तदभावोपसंहारार्थमतोऽस्मत्प्रत्ययेत्यादिभाष्यम् । अथ वा ऽहं मनुष्य इत्यादिप्रतीतावतस्मिंस्तत्प्रतीतित्वस्याध्यासलक्षणस्याभावे उक्ते लक्ष्याध्यासरूपत्वस्याभावप्रदर्शनार्थं **विषयविपर्ययेणेति ।** विषयो ऽचेतनः तस्य विपर्ययश्चैतन्यम् । इत्थम्भावे तृतीया । चिदात्मन ऐक्यारोपे हि विषयस्य चेतनत्व-

३ । २२

४ । ११

मिव भवतीति । तथापीति भाष्यसूचितामध्यासाभावहेतोर्विवेकग्रहस्यासि-
४ । २२ द्धिमाह **इदमत्राकूत*****मित्यादिना** । यथा श्रुत्यादिष्वात्मतत्त्वं गीयते तथा ऽहमित्यनुभवे यदि प्रकाशेत न त्वेतदस्तीति योजना । **परामर्शो** मध्ये निर्देशः । **क्रियासमभिहारः** पौनःपुन्यम् । **दर्शनीया** सुन्दरी । न त्वेतदस्तीति यदुक्तं तत्प्रपञ्चयति **अहमनुभवस्त्विति** । उपप्लवो विपर्यासो ऽस्य नास्तीत्यनुपप्लवो ऽहमनुभवः कथं विपर्यासशून्य इत्यर्थः । **कथमात्मतत्त्वगोचर** इत्यज्ञानं सूचितम् । प्रक्रमादिना तात्पर्यसिद्धावप्युपजीव्य-
५ । ७ विरोधादप्रामाण्यमाशङ्क्याह **न चेत्यादिना** । ज्येष्ठस्यापि पौर्वापर्यन्यायेन† बाधमाशङ्क्याह **तदपेक्षस्येति** । आगमस्य किं स्वजन्यज्ञानगतप्रमितित्वे प्रत्यक्षापेक्षा उत तदुत्पत्तौ । आद्ये‡ किं विपर्यासशङ्कानिरासाय संवादाय वा । एतद् द्वयं निरस्य द्वितीयं शङ्कते **प्रमिताविति** । आगमस्य किं प्रत्यक्षगतव्यावहारिकप्रामाण्येन विरोध उत तत्त्वावेदकत्वेन । नाद्य इत्याह **न हीति** । द्वितीयं प्रत्याह **न च तदिति** । एवमप्रामाण्यं निराकृत्योपचरितार्थत्वं निरस्यति **न चानन्यपरमिति** । पूर्वं भेदाग्रहसिद्ध्यर्थमिदमुक्तम् । इदानीमुपजीव्यविरोधाभावाय विधायके शब्दे परो लक्ष्यः शब्दार्थो न भवतीति शबरस्वामिनोक्तं तत्तुल्यं वेदान्तेष्वपि । अनधिगतार्थबोधित्वेन तत्परत्वसाम्यादिति§ । एवं तावदुपजीव्यत्वं प्रत्यक्षस्य निराकृत्य मुख्यत्वमाक्षस्य प्राबल्यहेतुतां निराकरोति **ज्येष्ठत्वं चेति** ।

११ । २४ **पौर्वापर्यइति** । षष्ठे स्थितम्‖ । ज्योतिष्टोमे ऽन्योन्यं संबध्य यज्ञशालातो निर्गच्छतामृत्विजां विच्छेदनिमित्तं प्रायश्चित्तं श्रूयते यद्युद्गाता विच्छिन्द्यादददक्षिणेन यजेत यदि प्रतिहर्ता सर्वस्वदक्षिणेनेति । तत्रोद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः समुच्चयासम्भवात् किं पूर्वं कार्यमुत परम् इति विशये ऽनुपजातविरोधित्वात्पूर्वमिति पूर्वपक्षे राद्धान्तः । पौर्वापर्ये सति निमित्तयोः पूर्वस्य नैमित्तिकस्य दौर्बल्यमुत्तरस्य निरपेक्षस्य तद्बाधकतयोदितत्वात्पूर्वोदयकाले उत्तरस्याप्राप्तत्वान्न पूर्वेण बाध्यत्वायोगात् । उक्तं हि ।

---

* इदमाकूतमिति २ पु॰ वर्जं सर्वेषु पाठः । मूले त्वत्रशब्दोऽस्तीति स एव पाठ उपरि न्यस्तः ।
† जैमिनिसू॰ अ॰ ६ पा॰ ५ सू॰ ५४ ।
‡ आद्ये ऽपीति २–३ पु॰ पा॰ ।
§ सामान्यादितीति २ पु॰ पा॰ ।
‖ जैमिनिसू॰ अ॰ ६ पा॰ ५ सू॰ ५४ ।

